भवन्ति । यथा श्वेतवस्त्रापहारकः श्वेतकुष्ठं यथा रक्तवस्त्रापहारको लोहितमंडलकादि ॥ २१६ ॥

[ २१७ श्लो. ] **यथेत्यादि** । कर्मानतिक्रमेण तत्फलं **तिर्यक्त्वमनुभूय** तावत्कालक्षयात् शुभलक्षणभक्ताच्छादनरहिता **दरिद्राः पुरुषाधमा जायन्ते** । 'ब्रह्महा क्षयरोगी स्यात्' इत्युक्तेन सहास्य समुच्चयः ॥ २१७ ॥

५ [ २१८ श्लो. ] **तत** इत्यादि । **ततः** कर्मफलोपभोगेनेत्यर्थः । **जायन्ते** शुभकर्मशेषेणेति शेषः ॥ २१८ ॥

[ २१९ श्लो. ] **विहितेत्यादि** । सति सामर्थ्ये **विहितस्य** नित्यस्य सन्ध्योपासनादेर-करणात् । निषिद्धप्राणिहिंसादेः सेवनात् **इन्द्रियाणां** वाऽ**निग्रहात्** शास्त्रनियमितविषयातिरिक्त-विषयसेवनात् बहुतरपापानुबन्धित्वाच्च पृथगुपादानम् । **नरः पतनं** नरकं याति ॥ २१९ ॥

१० [ २२० श्लो. ] **तस्मादित्यादि** । यस्मादकृतप्रायश्चित्तो नरकं याति तस्मात्कृतपापेन स्वशुद्ध्यर्थं **प्रायश्चित्तं** कार्यम् । **एवमस्यान्तरात्मा** क्षेत्रज्ञो **लोकश्च** निर्विचिकित्सो भवति । प्रायश्चित्तशब्दार्थमाह **अङ्गिराः**—

"प्रायो नाम तपःप्रोक्तं चित्तं निश्चय उच्यते । तपो निश्चयसंयुक्तं प्रायाश्चित्तमिति स्मृतम्[1]" ॥२२०॥

[ २२१–२२६ श्लो. ] **प्रायश्चित्तमित्यादि । प्रायश्चित्तैर्यथा** विहितैरकामकृतं नश्यति । १५ तस्मिन्नेव पापे कामतः कृते तेनैव प्रायश्चित्तेनेह लोके व्यवहार्यतामात्रं भवति । स्वल्पपापक्षया-न्नाशेषपापक्षयः कथं तर्हि व्यवहार्यतामात्रमिति चेत् । वचनात् । अयमर्थः–द्विविधं[2] हि पापमुत्पद्यते । शरीरगतमात्मगतं च । तत्र वचनादात्मगतपापसद्भावेऽपि[3] शरीरगतपापनाशे व्यवहार्यता । ब्रह्मवधादिपापशेषोत्पन्नदरिद्रादिशरीरकामकृतमपि प्रायश्चित्तांतरात् । अकामकृतं वेदाभ्यासा-द्विनश्यति । तथा च **मनुः**—( ११।४६ )—

२० "अकामतः कृतं पापं वेदाभ्यासेन शुध्यति । कामतस्तु कृतं मोहात् प्रायाश्चित्तैः पृथग्विधैः"॥ वेदाभ्यासेनेति कामतः प्रायाश्चित्तापेक्षया लघुप्रायश्चित्तोपलक्षणम् । प्रायश्चित्तान्तराणामपि विधानात् । तथा च **स्मृतिः**—

"प्रायश्चित्तमकामानां कामान्नाप्नोति मानवः । विहितं यदकामानां कामात्तद्द्विगुणं भवेत्" ॥ अतो वचनादनुपभुक्तफलमपि पापं नश्यतीति नाभुक्तं क्षीयते कर्मेत्यादि प्रायश्चित्तेतरविषयम् ॥

२५ [ २२१ श्लो. ] **प्रायश्चित्त**मित्यादि । पापनिरताः प्रायश्चित्तमकुर्वाणाः **अपश्चात्तापिनः** कष्टहेतून् **नरकान्** प्राप्नुवन्ति ॥ २२२ ॥

[ २२२–२२५ श्लो. ] तानेव नरकानाह । **तामिस्र**मित्यादि । **संघेत्यादि** । **अवीत्यादि** । **महेत्यादि** । तस्मादात्मशुध्यर्थं प्रायश्चित्तं कर्तव्यम् । स्पष्टान्येतानि । नरकस्वरूपं **मार्कण्डेय-**पुराणादिषु ज्ञेयम् ॥ २२५–२२५ ॥

३० [ २२७ श्लो. ] **ब्रह्मेत्यादि** । ब्राह्मणमरणफलव्यापारकारी । गौडीपैष्टीमाध्वीरूपत्रिविध-मद्यपानकर्ता । पैष्टीमात्रमद्यपः क्षत्रियो वैश्यश्च । ब्राह्मणसुवर्णजातीयस्यापहर्त्ता । गुरुदारगामी । एते चत्वारो महापातकिनः । **यश्च तैः सह** याजनादिरूपसंपर्कं करोति स पंचमः । क्षत्रियादीना-मपरमपि महापातकमाह **च्यवनः**—"ब्रह्महत्या सुरापानं गुरुतल्पं ब्राह्मणसुवर्णहरणं द्विजानां महा-

१ ब–स्थितिः । २ ब–कर्मणां पापं द्विविधं भवति । ३ ब–प्रायश्चित्तेन शरीरपापनाशात् ।

पातकानि । अदण्ड्यदण्डनं युधि पलायनं क्षत्रियस्य । मानतुलाऽनृतत्वं वैश्यस्य । मांसविक्रयणं ब्रह्महत्या ब्राह्मणीगमनं कपिलादुग्धपानं शूद्रस्य" ॥ २२७ ॥

[ २२८ श्लो. ] महापातकसामान्यान्याह । गुरूणामित्यादि । अध्याधिक्षेपोऽधिकोऽधिक्षेपः । अधीतस्य वेदस्य नाशनं विस्मरणम् ॥ २२८ ॥

[ २२९ श्लो. ] निषिद्धेत्यादि । जैह्म्यं धर्मक्रियासु कौटिल्यम् । उत्कर्षे स्वोत्कर्षार्थमनृत-वचनम् । रजस्वलामुखास्वादो रजस्वलागमनम् ॥ २२९ ॥ ५

[ २३० श्लो. ] अश्वेत्यादि । भूमिहरणं ब्राह्मणभूमिहरणम् 'ब्राह्मणभूमिहरणं सुवर्ण-स्तेयसमम्' ( ३६।३ ) इति विष्णुस्मरणात् । मनुना तु रजतमप्यत्र पठितम् ॥ २३० ॥

[ २३१ श्लो. ] सखीत्यादि । सख्युर्भार्यासु कुमारीषु ब्राह्मणकन्यासु स्वयोनिषु स्वकुलोत्पन्नासु अन्त्यजासु चाण्डालादिस्त्रीषु । स्वगोत्रासु सुतस्त्रीष्वरुद्धास्वपि ॥ २३१ ॥ १०

[२३२-२३३ श्लो.] पितुरित्यादि । आचार्येत्यादि । स्नुषां पुत्रभार्याम् । छित्वा लिंगमिति ब्राह्मणव्यतिरिक्तविषयम् । सकामायाः स्त्रियास्तथेति । अत्युत्कटकामितया अकामयमानं पुरुषं या प्रवर्तयति तस्या अप्येतादृशं कार्यम् । अत एव दण्डप्रकरणे नारदः (१२।७३-७५)—
"माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
"दुहिताचार्यभार्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री तथा वर्णोत्तमा च या ॥ १५
"आसां अन्यतमां गत्वा गुरुतल्पग उच्यते । शिश्नस्योत्कर्तनात्तत्र नान्यो दण्डो विधीयते" ॥ २३३ ॥

उपपातकान्याह

[ २३४ श्लो. ] गोवधेत्यादि । गोः प्राणवियोगः । व्रात्यता यथाकालमनुपनयनम् । असोम-याजित्वं च । स्तेयमश्वसुवर्णरत्नादिव्यतिरिक्तस्य सारद्रव्यस्य । ऋणानां देवर्षिपितृसम्बन्धिनाम् यज्ञाध्ययनप्राजापत्यकरणम् । अनाहिताग्निता सत्यधिकारे । अपण्यस्य मांसादेः सकृदपि विक्रयः । परिवेदनं ज्येष्ठेऽकृतदाराग्निहोत्रे दाराग्निग्रहणम् ॥ २३४ ॥ २०

[ २३५ श्लो. ] भृतादित्यादि । मूल्येनाध्ययनमध्यापनं च । वार्द्धुष्यमनापदि । लवण-क्रिया वानप्रस्थेतरस्य । "तस्य च लवणं चेत्स्वयंकृतम्" इति विधानात् ॥ २३५ ॥

[ २३६ श्लो. ] स्त्रीत्यादि । स्त्री द्विजातीयाऽपकृष्टा । निन्दितार्थोपजीवनं वर्त्तमान-मूल्यादधिकमूल्यग्रहणम् । नास्तिक्यमदृष्टाभावबुद्धिः । व्रतलोपो ब्रह्मचारिणो मैथुनम् । सुतानामनेकविधानामपि ॥ २३६ ॥ २५

[ २३७ श्लो. ] धान्येत्यादि । कुप्यं ताम्रकांस्यादि । अयाज्याः पातकिशूद्रादयः । आरामस्य सर्वार्थं कृतस्य ॥ २३७ ॥

[ २३८ श्लो. ] कन्येत्यादि । कन्यादूषणमंगुल्या योनिविदारणम् । परिवेदकयाजनम् । विवाहादौ तस्यैव परिवेदकस्यैव कन्यादानम् । कौटिल्यं मित्रपुत्रादौ । व्रतलोपनं व्रतत्यागः ॥ २३८ ३०

[ २३९ श्लो. ] आत्मेत्यादि । अनातुरस्य देवाद्यनुद्देशेन पाकाद्यनुष्ठानम् । मद्यपस्त्रीगमनं द्विजानामुपपातकम् । स्वाध्यायत्यागोऽत्र विस्मरणपर्यन्तः । बान्धवत्यागः सति विभवे पित्रादीनामपोषणम् ॥ २३९ ॥

---

१ ब–समानि । २ अ–ध्यापेक्षा । ३ ब– ब्राह्मणेतरपरम् । ४ अ–त्वा । ५ ब–पितृव्या ।

[ २४० श्लो. ] **इन्धनार्थमिति** । इन्धनार्थमार्द्राऽश्वत्थादिकर्त्तनम् ‘ इन्धनार्थमशुष्काणाम् ’ इति वचनात् । **स्त्रीजीवनं** वेश्यारूपेण । **हिंसया** प्राणिवधेन । **यन्त्रविधानं** प्राणिवधार्थम् । **व्यसनानि** मृगयादीनि ॥ २४० ॥

[ २४१ श्लो. ] **शूद्रेति** । शूद्रभृत्यता । **हीनयोनिः** चाण्डाल्यादिः । ब्रह्मचार्याद्यग्रहणं
५ अश्रोत्रियान्नपुष्टता ॥ २४१ ॥

[ २४२ श्लो. ] **असदित्यादि** । बौद्धादिशास्त्राभ्यासः । सुवर्णादिस्थानेषु राजाज्ञयाऽधिष्ठानम् । **भार्याया** अपरिणीताया अपि विक्रयः ॥ २४२ ॥

[ २४३ श्लो. ] यथोद्देशेन ब्रह्मवधादिप्रायश्चित्तमाह । **शिर** इत्यादि । “ ब्राह्मणं हत्वा तस्यैव शिरः कपालमादाय ” इति **शातातपवचनात्** घातितब्राह्मणशिरःकपाली । तदभावेऽन्यस्यापि
१० ब्राह्मणस्य ‘ कृत्वा शवशिरोध्वजम् ’ इति ( ११।७२ ) **मनुवचनात्** । शवशिरोन्वितो ध्वजयुक्तः । ध्वजोऽत्र खट्वांगरूपः । वन्याहारासमर्थो ग्रामं प्रविश्य भिक्षार्थी ब्राह्मणहननं ख्यापयन् मुन्यंतरोक्तमृन्मयपात्रादिना मितान्नभोजी ब्रह्महा ब्राह्मणो द्वादशे वर्षे शुद्धिमाप्नोति । एतच्च निर्गुणब्राह्मणेनाबुद्धिपूर्वं सगुणब्राह्मणवधे बोद्धव्यम् । बुद्धिपूर्वमपि सगुणाततायिब्राह्मणवधे जातिमात्रब्राह्मणवधे च । यथा **भविष्ये**–

१५ “ब्राह्मणो ब्राह्मणं हत्वा जातिमात्रो गुणान्वितम् । प्रायश्चित्तमिदं कुर्यादेकं पापविशुद्धये ॥
“ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् । अबुद्धिपूर्वं भिक्षाशी कृत्वा शवशिरोध्वजम्”॥

तथा—

“ हत्वा तु प्रहरन्तं वै ब्राह्मणं वेदपारगम् । कामतोऽपि चरेद्वीर द्वादशाख्यमनुत्तमम् ॥
“ ब्राह्मणं जातिमात्रं वै कामतोऽपि निपात्य च । चरेद्द्वादशवर्षाणि हन्ता निर्गुण एव च ” ॥

२० यदा त्वेकं निमित्तमाश्रित्य एकदा द्वौ बहून् वा ब्राह्मणान् हन्यात्तदाऽप्येकमेव प्रायश्चित्तं नावृत्त्या । यथा—

“ एककालं यदा हन्याद्युगपत्सुरनन्दन । निमित्तमेकमाश्रित्य हेतुनैकेन वा विभो ॥
“ब्राह्मणं ब्राह्मणो वीर ब्राह्मणान् सुबहूनपि । निहत्य युगपद्वीर एकं प्राणान्तिकं चरेत्”॥२४३-२४६॥

[ २४७ श्लो. ] **लोमेत्यादि** । लोमभ्यस्त्वचे लोहिताय मेदसे मांसेभ्यः स्नायुभ्य अस्थिभ्यो
२५ मज्जाभ्यः स्वाहेति प्रत्येकमुक्त्वा प्रत्येकमाहुतित्रयमष्टभिर्मन्त्रैर्लोमादिक्रमेण गृह्योक्तविधिनाऽग्निमुपसमाधाय मज्जापर्यन्तां तनुं जुहुयात् । ततोऽवाक्शिरास्तस्मिन्नेवाग्नौ प्रविशेत् । एतच्च बुद्धिकृतक्षत्रियस्य चतुर्वेदविद्ब्राह्मणवधे द्रष्टव्यम् । यथा क्षत्रियानुवृत्तौ **भविष्ये**—

“ चतुर्वेदविदं वीर ब्राह्मणं चाग्निहोत्रिणम् । निहत्य कामादात्मानं क्षिपेदग्नाववाक्शिराः ” ॥

[ २४४ श्लो. ] **ब्राह्मेत्यादि** । ब्राह्मणस्यैकस्यानेकस्य वा जलाग्न्यादिपीडितस्य रक्षणात् ।
३० ब्राह्मणेषु निवेद्याश्व मेधाऽवभृतस्नानाद्वा शुद्धिमाप्नोति । यज्ञान्तरावभृथस्नानेऽप्येतदेवाह **गौतमः** ( ५।१० )–“ अश्वमेधावभृते अन्ययज्ञेऽप्याग्निष्टुदंतश्च ” इति ॥ २४४ ॥

[ २४५ श्लो. ] **दीर्घेत्यादि** । आरब्धद्वादशवार्षिक एकं तीव्रव्याधिपीडितं ब्राह्मणं गां वा औषधादिना व्याधिरहितं कृत्वा असमाप्तद्वादशवार्षिकव्रत एव शुद्धिमाप्नोति । पूर्वं प्राणत्यागद्वारेणापि त्राणं इह तु न तथेत्यपौनरुक्त्यम् । “ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजेत्”
३५ इति ( ११।७९ ) **मनुवचनात्** ॥ २४५ ॥

---

१ व–परि– । २ अ–ति ।

[ २४६ श्लो. ] **आनीये**त्यादि । चौरहृतं ब्राह्मणद्रव्यं युद्धेन विजित्यानीय शुध्यति । अथवा शस्त्रैस्त्रीन् वारान् घातितस्तन्निमित्तं च शस्त्रक्षतो जीवन्नप्यनानीयापि कृतयुद्धः शुध्यति । प्रक्रान्तत्वात् द्वादशवर्षस्यैतद्बोद्धव्यम् ॥ २४६ ॥

[ २४९ श्लो. ] **अरण्य** इत्यादि । प्रक्रान्तत्वात् द्वादशवार्षिक एव व्रतचरणासमर्थ अरण्ये अष्टग्रासादिपरिमितभोजी स्ववेदसंहितां मंत्रात्मिकां त्रिर्जपित्वा शुध्यति । संहिताग्रहणं पदक्रम- ५ निरासार्थम् । अथवा मिताहार एव यत्र देशे सरस्वत्याः प्रतिस्रोतस्तं विनशनाख्यं देशं गत्वा सरस्वत्यां स्नात्वा शुध्यति ॥ २४९ ॥

[ २४८ श्लो. ] **संग्राम** इत्यादि । **संग्रामे** काण्डाद्यस्त्रधारिणो **लक्ष्यभूतः** शस्त्रादिहतः शुद्धिमाप्नोति । यदि कथंचिदायुःकर्मवशेन जीवति तदापि शुध्यति । प्राणनिरपेक्षप्रवृत्तत्वात् । कामतः क्षत्रियकृतब्रह्मवधविषयमिदम् । यथा **भविष्ये**— १०

"क्षत्रियो निर्गुणो वीर ब्राह्मणं वेदपारगम्। निहत्य कामतो वीर लक्ष्यं शस्त्रभृतो भवेत्"॥२४८॥

[ २५० श्लो. ] **पात्र** इत्यादि । विद्यावृत्तसंपन्ने ब्राह्मणे यावज्जीवनिर्वाहसमर्थं **धनं दत्वा** शुद्धिमाप्नोति । तत्प्रतिग्रहीतुश्च निषिद्धप्रतिग्रहजनितपापक्षयार्थं **वैश्वानरी** इष्टिः स्मृता । एतच्च वेदाग्निरहितधनवद्ब्राह्मणेन बुद्धिपूर्वं जातिमात्रब्राह्मणवधे । तथा च **भविष्ये**—

"जातिमात्रं यदा हन्याद्ब्राह्मणायोपपादयेत् । धनं वा जीवनायालं गृहं वा सपरिच्छदम् " ॥ १५

ब्राह्मणस्य यदुक्तं प्रायश्चित्तं तत् क्षत्रियादीनां द्विगुणं त्रिगुणं चतुर्गुणं बोद्धव्यम् । यथा **भविष्ये**—

"पर्षद्विधानमत्रैव प्रोक्तमाङ्गिरसेन तु । द्विगुणा क्षत्रियाणां तु वैश्यानां त्रिगुणा हि सा ॥

"चतुर्गुणा तु शूद्राणां पर्षदुक्ता महात्मना । पर्षद्वच्च व्रतं प्रोक्तं शुद्धये पापकर्मिणाम् ॥

"अनेन ज्ञायते विप्र वर्णानामुत्तमाहते ।

"अधमानां तु वर्णानामुत्कृष्टहनने गुह । गुरौ गुरुतरं[2] ज्ञेयं क्षत्रादीनामसंशयम्" ॥ २५० ॥ २०

[ २५१ श्लो. ] **यागे**त्यादि । सोमयागस्थक्षत्रियवैश्यवधे ब्रह्महाणि यद्व्रतं तच्चरेदित्यर्थः ॥

**यथावर्णमिति** । यद्वर्णो वत्सगर्भस्तद्वर्णोपदिष्टमेव प्रायश्चित्तं चरेत् । आत्रेय्या वधे विशेषः । आत्रेयी तावत्रिविधा जन्मप्रभृति संस्कारसंस्कृता गर्भिणी ऋतुमती अत्रिगोत्रा च । यथाह **यमः**—

"जन्मप्रभृतिसंस्कारैः संस्कृता ब्रह्मवर्चं[3] या । गर्भिणी या ऋतुमती तामात्रेयीं विनिर्दिशेत्" ॥

**विष्णुः** ( ५०।९ )– 'अत्रिगोत्रां वा नारीं मित्रं वा' इति ॥ २५१ ॥ २५

[ २५२ श्लो. ] **चरे**दित्यादि । यो यद्वर्णवधार्थं कृतखड्गादिधारणः स तद्वर्णवधोपदिष्टं व्रतं दैवादजातेऽपि मरणे कुर्यात् । अत्र व्रतमात्रातिदेशात् "आतिदेशिकमुक्तानामुक्तं चान्द्रायण-त्रयम्"इति **भविष्यपुराणोक्तं** चान्द्रायणत्रयं बोद्धव्यम् । **सवनस्थे** सोमयागस्थे **ब्राह्मणे** हते ब्रह्मवधोक्तं **द्विगुणं** व्रतमादेष्टव्यम् । यथा ब्राह्मणदाने फलविशेषस्तथा प्रायश्चित्तेऽपि । यथा **दक्षः**–"दत्तं द्विगुणसाहस्रमनन्तं तु यथाक्रमम् । दाने फलविशेषः स्याद्धिंसायां तावदेव तु"॥२५२॥ ३०

[ २५३ श्लो. ] **सुरांबुघृते**त्यादि । ज्ञानपूर्वो ब्राह्मणः **सुरां** पैष्टीं पीत्वा सकृदप्यास्वाद्य पश्चानामन्यतममग्निसन्निधं तप्तं पीत्वा मरणाच्छुद्धिमिच्छति । 'अग्निवर्णां पिबेद्द्विजः' इति (२०।२२)

---

१ ब–दोषो । २ ब–रो—यः—। ३ ब–र्चसा ।

वशिष्ठेन द्विजग्रहणात् अनुपनीतस्य न मरणान्तिकं प्रायश्चितम् । एतदेव विशेषत उक्तं भविष्ये—
" प्रायेण धर्मशास्त्रेषु सर्वेष्वेव नराधिप । मतिपूर्वे सुरापाने प्राणान्तिकमुदाहृतम् ॥
"पैष्टीपाने तु ऋषिभिर्नेतरस्यां कदाचन" ॥ तथा—
"गौडीमज्ञानतः पीत्वा ब्राह्मणोऽब्राह्मणप्रियः । तप्तकृच्छ्रं तु वै कृत्वा पुनः संस्कारतः शुचिः॥
५ "माध्वीं पीत्वा महाबाहो अज्ञानाद्विजसत्तमः । शुध्यते तप्तकृच्छ्रेन विकर्माभ्यसनात्तथा ॥
"मतिपूर्वं यदा गौडीं पिबेद्विप्रः सुराधिप। तदा चान्द्रायणं कुर्याद्गां च दद्याद्विजोत्तमे" ॥२५३॥

[ २५४ श्लो. ] वालवासेति । वालरचितपरिधानो ब्रह्महत्त्याव्रतं द्वादशवार्षिकं वा चरेत् । अथवा तिलकल्कं तण्डुलादिकणान् वा रात्रौ वर्षमेकं भक्षयेत् । " एतदेव व्रतं कुर्यान्मद्यपः कृतछर्द्दनः " इति व्यासवचनात् कृतसुरावमनेनेदं कर्त्तव्यम् ॥ २५४ ॥

१० [ २५५ श्लो. ] अज्ञानादित्यादि । अज्ञानतः सुरादिकं भक्षयित्वा द्विजातयः पुनरुपनयनमर्हन्ति । एतत्तप्तकृच्छ्रपूर्वकम् । यदाह गौतमः ( २३।२-३ )—" अमत्या पाने पयोघृतमुदकं वायुः प्रतित्र्यहं तप्तमिति तप्तकृच्छ्रस्ततोऽस्य संस्कारः । मूत्रपुरीषरेतसां प्राशने च वपनं मेखला दण्डो भैक्षचर्याव्रतानि च " । " निवर्तन्ते द्विजातीनां पुनः संस्कारकर्माणि " इति (९।१५१) मनुवचनाद्यद्यपि वपननिवृत्तिस्तथापि " सशिखं वपनं कृत्वा पुनः संस्कारमर्हति "
१५ इत्यंगिरोवचनादत्र वपनं बोद्धव्यम् ॥ २५५ ॥

[ २५६ श्लो. ] पतिलोकमित्यादि । या ब्राह्मणी सुरां पिबेत्सा पत्या सह धर्मचरणेन योऽर्जितः स्वर्गादि स्वर्गादिलोकस्तं न याति । मृता सती इह संसारे श्वादियोनिषु जायते । वशिष्ठोऽपि (२१।११)–" या ब्राह्मणी सुरापी न तां देवाः पतिलोकं नयन्ति " इति ॥२५६॥

[ २५७ श्लो. ] ब्राह्मण इत्यादि । विप्रसम्बन्धिस्वर्णहरणे कामतः कृते राज्ञे आयसं
२० मुशलमर्पयेत् । तेन मुशलेन राजा सकृदेव हन्यात् । तत्प्रहारेण मृतो जीवितो वा शुध्येत् । शातातपः—" कामतस्तु कृतं यस्मान्नान्यथा शुद्धिमर्हति " ॥ मनुः ( ११।१०० )—
" गृहीत्वा मुसलं राजा सकृद्धन्यात्तु तं स्वयम् । वधेन पूयते स्तेनो ब्राह्मणस्तपसैव वा " ॥
एवकारो ब्राह्मणवधनिषेधार्थः । वाशब्दो दण्डविकल्पार्थः । यथा यमः—
" ब्राह्मणस्यापराधे तु चतुर्द्धैव विधीयते । शिरसो मुण्डनं दण्डः पुरान्निर्वासनं तथा ॥
२५ "प्रख्यापनार्थं पापस्य प्रयाणं गर्दभेन च । ललाटे चांककरणं कुर्याद्राजा यथाविधि " ॥
तथा भविष्ये—
"यदेतद्वचनं वीर ब्राह्मणस्तपसैव वा । तत्रैव करणाद्विद्धि ब्राह्मणस्य सुराधिप ॥
"तपसैवेत्यनेनेह प्रतिषेधो वधस्य तु" ॥

तथा—

३० " वाशब्दग्रहणाद्वीर तपो वा ब्राह्मणस्य तु। दण्डो वा कीर्तितस्तज्ज्ञैर्न वधस्तु कदाचन"॥
अत्यन्तगुणवदग्निहोत्रब्राह्मणस्य सानुबन्धं प्रचुरसुवर्णापहारे निर्गुणस्य वध एव । यथा भविष्ये—
"ब्राह्मणस्य गुणाढ्यस्य हृत्वा विप्रस्तु निर्गुणः। प्रभूतं सानुबन्धं च स शुध्येत कटाग्निना"॥२५७॥

[ २५८ श्लो. ] **अनाख्याय**[1]**इत्यादि**। राजनि निवेदनं विनैव द्विजः शुद्धिमिच्छन् 'वाल-वासा जटी' इत्यादि श्लोकोक्तं द्वादशवार्षिकव्रतं यत्सुरापस्य तदाचरन् शुध्येत। असमर्थस्तु आत्मतुलितं सुवर्णं दद्यात्। आरब्धद्वादशवार्षिकव्रतो यदि तदाचरणासमर्थो यावता सुवर्णेन विप्रतुष्टिस्तावद्दद्यात्॥ २५८॥

[ २५९ श्लो. ] **तप्तेऽय** इत्यादि। गुरुतल्पगो मातृव्यतिरिक्तगुर्वंगनागामी प्राणात्ययहेतु-तापयुक्ते लोहमये शयने लोहनिर्मितया प्रतिमया वा ज्वलन्त्या सह सुप्यात्। यथा **संवर्त्तः**—

"ख्यापयन् गुरुतल्पं तु तल्पे सुप्यादयोमये। सोऽवगूहेत दीप्तात्मा स्त्रियं कालायसीं कृताम्"॥

अथ आयसशयनायसालिङ्गनयोर्विकल्पः। अथवा शिश्नवृषणौ क्षुरेण छित्वाऽञ्जलौ गृहीत्वा नैऋत्यां दिशि अकुटिलगतिं कुर्वन् तनुं त्यजेत्। यद्यप्यत्र गुरुतल्पपदान्माताऽपि प्रतीयते तथापि ज्ञानतो मातृगमने प्रायश्चित्ताभाव एव। अज्ञानतोऽपि **विष्णवाद्युक्तप्राणान्तिकमेव** प्रति-पत्तव्यम् (३४।१-२)—'मातृगमनं दुहितृगमनं स्नुषागमनमित्यतिपातकानि'

"अतिपातकिनस्त्वेते प्रविशेयुर्हुताशनम्। न ह्यन्या निष्कृतिस्तेषां विद्यते हि कथंचन"॥

तथा **संवर्तः**—

"मातरं यदि गच्छेत्तु स्नुषां वा पुरुषाधमः। न तस्य निष्कृतिं विन्द्यात् स्वकां दुहितरं तथा"॥

निष्कृतिरत्र लोकसंव्यवहार्यता। एतन्महापातकादप्यतिगुरु। अत एव **विष्णुः** (४३।२४)—

"एतेष्वकृतप्रायश्चित्ता अतिपातकिनः कल्पं पच्यन्ते मन्वन्तरं महापातकिनः उपपातकिनश्चतु-र्युगम्" इति। अतिपातके च नरकगौरवमवगम्यते॥ २५९॥

[ २६०–२६१ श्लो. ] **प्राजापत्यमित्यादि**। एतत्प्रायश्चित्तद्वयमसवर्णसदोषगुरुभार्यागमने वेदितव्यम्।

**एभिरित्यादि**। एवं ब्राह्मणादिभिश्चतुर्भिः प्रत्येकं मिलितैर्वा ज्ञानतो यः संवत्सरं **संवसेत्** संसर्गं करोति **सोऽपि तत्समः**। तथा च **देवलः**—

"पतितेन सहोषित्वा जानन्संवत्सरं नरः। मिश्रितस्तेन सोऽब्दान्ते स्वयं च पतितो भवेत्"॥

संसर्गप्रकारमाह **देवलः**—

"एकशय्यासनं पंक्तिभाण्डपक्वान्नमिश्रणम्। याजनाऽध्यापनं योनिस्तथा च सहभोजनम्॥

"नवधा संकरः प्रोक्तो न कर्त्तव्योऽधमैः सह"॥

**हारीतोऽपि**—

"आलापाद्गात्रसंस्पर्शान्निश्वासात्सहभोजनात्। एकयानासनाभ्यां च पापं संक्रमते नृणाम्"॥

तत्र याजनादिचतुष्कस्य सद्यःपातकहेतुत्वमाह **देवलः**—

"याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतन्त्येव पतितेन न संशयः"॥

एतेषामेव संवत्सरेण पातकहेतुत्वमाह **मनुः** (११।१८०)—

"संवत्सरेण पतति पतितेन न संशयः। याजनाऽध्यापनाद्यौनान्न तु यानासनाशनात्"॥

ज्ञानाऽज्ञानाभ्यां व्यवस्थोक्ता **कूर्मपुराणे**—

"याजनं योनिसम्बन्धं स्वाध्यायं च तथैव च। कृत्वा सद्यः पतेज्ज्ञानात् सहभोजनमेव च॥

"अज्ञानाद्यस्तु कुरुते सहैवाध्ययनं द्विजः। संवत्सरेण पतति सहाध्यापनमेव च"॥

---

१ शूलपाण्युद्धृतपाठः। इतरपुस्तकेषु 'अनिवेद्य' इति पठितम्।

'यानासनादशनात्' इति मनुवचने त्रयाणां यानादीनां द्वंद्वनिर्देशात् मिलितानां लघुसंसर्गाणामज्ञानाद्वत्सरेण पातहेतुत्वं ज्ञानतः षण्मासेन । प्रायश्चित्तविशेषमाह व्यासः—

"यो येन संपिबेद्वर्षं सोऽपि तत्समतामियात् । पादन्यूनं चरेत्सोऽपि तस्य तस्य व्रतं द्विजः" ॥२६०॥

[ २६१ श्लो. ] कन्यामित्यादि । एषां पतितानामकिंचनामलंकारादिपितृधनरहितां ५ कन्यामुद्वहेत् । तथा च वशिष्ठः ( १३।५१-५३ )—"पतितोत्पन्नः पतितो भवेदन्यत्र स्त्रियाः । सा हि परगामिनी । तामरिक्थामुपेयात्" । "अशुचि शुक्रोत्पन्नानामिच्छतां प्रायश्चित्तं पतनीयानां तृतीयो भागः स्त्रीणामंशात्रितीय" इति (२।१।५१) बौधायनदर्शनादिच्छया प्रायश्चित्तमपि कारणीया । महापातकसमानानामप्येतादृशानि प्रायश्चित्तानि वेदितव्यानि । यथा विष्णुः (३६।१-८)—"यागस्थक्षत्रियस्य वधो वैश्यस्य रजस्वलायाश्चान्तर्वत्न्याश्चात्रिगोत्रायाश्चा १० विज्ञातगर्भस्य शरणागतघातनं ब्रह्महत्यासमानि । कौटसाक्ष्यं सुहृद्वध इत्येतौ सुरापानसमौ । ब्राह्मणभूमिहरणं सुवर्णस्तेयसमम् । पितृपितृव्यमातामहमातुलश्वशुरनृपपत्न्यभिगमनं गुरुदारगमनसमम् । पितृस्वसृमातृस्वसृगमनं च । श्रोत्रियर्त्विगुपाध्यायमित्रपत्न्यभिगमनं स्वसृसख्याः सगोत्राया उत्तमवर्णाया अन्त्यजायाः कुमार्या रजस्वलायाः शरणागतायाः प्रव्रजितायाश्च । अनुपातकिनस्त्वेते महापातकिनो यथा । अश्वमेधेन शुध्यन्ति तीर्थानुसरणेन वा" ॥ १५ पत्नी शब्दोऽत्र लक्षणया स्त्रीमात्रपरः । मुख्यभार्यागमनस्य महापातकत्वात् । तथा द्वादशवार्षिकव्रतानुवृत्तौ शंखः—

"कौटसाक्ष्यं तथैवोक्त्वा निःक्षेपमपहृत्य च । एतदेव व्रतं कुर्याद्धत्वा च शरणागताम्" ॥२६१॥

[ २६२ श्लो. ] चान्द्रेत्यादि । अवकृष्टान् विलोमजान् मागधादीन् बुद्धिपूर्वं हत्वा चान्द्रायणं चरेत् । जपहोमादिरहितः शूद्रः कालेन द्वादशवार्षिकादिना शुध्यति । तथा च २० शंखलिखितौ—"कृच्छ्राणि द्विजातीनामेव नावरस्य कामं धर्मेच्छोरप्रतिषेधः" इति । द्विजातीनामेव मन्त्रजपहोमादिवन्ति कृच्छ्राणि न शूद्रादेर्मन्त्ररहितत्वात् । धर्मेच्छोः पापशुद्धिकामस्य शूद्रादेरपि कृच्छ्रमात्रनिषेधः । तथांगिराः—

"तथा शूद्रं समासाद्य सदा धर्मपुरःसरम् । प्रायश्चित्तं प्रदातव्यं वेदमन्त्रविवर्जितम्" ॥२६२॥

[ २८५ श्लो. ] मिथ्येत्यादि । मिथ्याभिशापं वदतो मिथ्याभिशापदोषो द्विगुणो भवेत् । २५ विद्यमानदोषसंख्यापयन् तद्दोषसमादोषः । किं च मिथ्याभिशस्तदोषं च मृषा वदन् समादत्ते यमः—

"प्रत्यक्षं वा परोक्षं वा पतितं यदि पश्यति । प्रत्यादेशो न कर्तव्यो रक्षेदात्मानमात्मना ॥
"यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रान्पशून्घ्नन्ति तेषां मिथ्याभिशंसिनाम्" ॥
॥ २८५ ॥

३० [ २६३ श्लो. ] पञ्चेत्यादि । निधानमन्तरे गोघ्नो मासं पंचगव्यं पिबेत् । ब्रह्मचर्ययुक्तश्चासीत । मासान्ते गोदानेन शुध्यति । पंचगव्यपाने चाहारान्तरं न कार्यम् । "गोघ्नः पञ्चगव्याहारः पञ्चविंशतिरात्रमुपवसेत्" इति शंखवचनात् । स्मृत्यन्तरोक्तमसमविरुद्धमप्यत्रानुष्ठेयम् ।

१ अ—नृ । २ एष श्लोक इतरपुस्तकेषु २८५ अंकितः शूलपाणिनाऽत्र पठितः ।

शातातपः—"गोमतीं च जपेद्विद्याम्" इति । ब्रह्मपुराणे—
"आदौ गोपतये दत्वा गोमूल्यं साधु कल्पितम् । यथोत्पन्नेन तस्यास्तु चर्मणा छन्नविग्रहः" ॥
विश्वरूपेण 'गोष्ठे शय' इति पठितम् । तदेतत् क्षत्रियसम्बन्धिगोवधे बुद्धिपूर्विके वेदितव्यम् ॥ २६३ ॥

[ २६४ श्लो. ] कृच्छ्रमित्यादि । अतिकृच्छ्रं प्राजापत्यं कृच्छ्रं वक्ष्यमाणम् । एतन्मीलितं पूर्वोक्तविषये कुर्यात् । अथवा त्रिरात्रमुपोष्य वृषभैकसहिता दश गा दद्यात् । मन्वादिभिश्चतुर्थ- ५ कालभोजनादिना मासत्रयादिसाध्यगोवधप्रायश्चित्तमुक्तम् । तद्विधानं स्पष्टमाह बृहस्पतिः—
"शस्त्रादिना तु हत्वा गां मानवं व्रतमाचरेत्" ।
मानवमाङ्गिरसमापस्तम्बोक्तमेव वा—
"पादं चरेद्रोधवधे कृच्छ्रार्द्धं रोधघातने । अतिवाहे च पादोनं कृच्छ्रमज्ञानताडने ॥
"गर्भिणीं कापिलां दोग्ध्रीं होमधेनुं च सुव्रताम्" ॥ रोधादिना गोवधे कृच्छ्रपादादिकं ज्ञानत १० आंगिरसमापस्तम्बोक्तं वा । विशेषमाह पराशरः—
"धुर्य्येषु वहमानेषु दण्डेनाभिहतेषु च । काष्ठलोष्ठहते वापि पाषाणेन तु ताडितः ॥
"दिनैः कतिपयैश्चापि मृतो वा सद्य एव च । एवं गवां च धुर्याणां प्रवक्ष्यामि यथाविधि ॥
"ताडितस्तु यदा गच्छेत्पञ्चसप्तपदानि वा । ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम् ॥
"पूर्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते" ॥ अन्यानि च स्मृत्यन्तरोक्तानि लघुगुरुप्रायश्चित्तानि १५ हन्तृगुणयोग्यतातारतम्येन व्यवस्थेयानि ॥ २६४ ॥

[ २६५ श्लो. ] उपेत्यादि । उक्तेन गोवधप्रायश्चित्तेन उक्तोपपातकेष्वन्येषु प्रतिपदोक्त- क्षत्रियादिगोवधव्यतिरिक्तेषु शुद्धिर्भवेच्चान्द्रायणेन वा । मासं दुग्धपानेन पराकेण वा । एतच्च ज्ञानतः कृते । अमीषां शक्त्यपेक्षो विकल्पः । 'सोमविक्रयी प्राजापत्यम्' इत्यादिपैठीनस्याद्युक्त- प्रायश्चित्तानि ज्ञानाज्ञानशक्त्यनुबन्धापेक्षया व्यवस्थेयानि । यत्तु शंखलिखिताभ्यां 'हिरण्य- २० स्तेनो मासं गोमूत्रयावकं पिबेत्' इत्युपपातकप्रायश्चित्तं पठितं तद्ब्राह्मणेतरसुवर्णहरणविषयम् । ब्राह्मणसुवर्णहरणस्य महापातकत्वात् ॥ २६५ ॥

[ २६६ श्लो. ] वृषभेत्यादि । एतद्वृषभाधिकगोसहस्रदानं वर्षत्रयमहाव्रताचरणं च ब्राह्मणस्य मतिपूर्ववृत्तस्थक्षत्रियवधे वेदितव्यम् । तथा मनुः ( ११।१२७,१२८ )—
"अकामतस्तु राजन्यं विनिपात्य द्विजोत्तमः । वृषभैकसहस्रा गा दद्याच्छुध्यर्थमात्मनः" ॥ २५
तथा—
"तुरीयो ब्रह्महत्यायाः क्षत्रियस्य वधे स्मृतः । वैश्येऽष्टमांशो वृत्तस्थे शूद्रे ज्ञेयस्तु षोडश" ॥
यत्तु गोतमेन (२२।१४)—"राजन्यवधे षाड्वार्षिकं प्राकृतं ब्रह्मचर्यं वृषभैकसहस्रा गाश्च दद्यात्" इति समुच्चय उक्तस्तद्ब्राह्मणजातवृत्तस्थक्षत्रियवधे । नृपतिरूपक्षत्रियवधे । विष्णुः (५०।११)—
"नृपतिवधे महाव्रतमेतद्द्विगुणं कुर्यात्" इति ॥ २६६ ॥ ३०

[२६७ श्लो.] वैश्येत्यादि । वृत्तस्थवैश्यवधे एतदेव महाव्रतं वर्षमेकं ब्राह्मणश्चरेत् । अथवा गवां वृषभैकशतं दद्यात् । एवंविधशूद्रवधे एतदेव व्रतं षण्मासानाचरेत् । अथवा धेनूर्दश दद्यात् ॥ २६७ ॥

१ ब–छि । २ अ–काष्ठेन लेष्टुना ।

[ २६८ श्लो. ] दुर्वृत्तेत्यादि। अनियतपुरुषगामिनीर्ब्राह्मण्यादिस्त्रियो हत्वा हत्यानुसारेण यथाक्रमं दद्यात्। दृतिश्चर्मपुटं बस्तश्छागः। तथा मनुः ( ११।१३८ )—

"जीनकार्मुकबस्तावीन् पृथग्दद्याद्विशुद्धये। चतुर्णामपि वर्णानां नारीर्हत्वाऽनवस्थिताः"॥

जीनं चर्म॥ २६८॥

५ [ २६९ श्लो. ] अप्रेत्यादि। अज्ञानतो गुणहीनब्राह्मणमात्रपत्नीं हत्वा शूद्रहत्याव्रतम् गुणिनः स्त्रीवधे यमः—

" आहिताग्नेर्द्विजातेस्तु हत्वा पत्नीमनिन्दिताम्। ब्रह्महत्याव्रतं कुर्यादात्रेयीघ्नस्तथैव च॥

" अनाहिताग्निपत्नीनां ब्रह्मविट्क्षत्रयोषिताम्। गोघातकव्रतं कुर्याच्छूद्रायां चैव नित्यशः"॥

अस्थिमतां ज्येष्ठिकादीनां सहस्रं हत्वा अनस्थिमतां क्षुद्राणां अनः शकटं तत्पूरण-
१० परिमितं च हत्वा शूद्रहत्याव्रतमाचरेत्। विशेषमाह यमः—"अत ऊर्ध्वं कृमिकीटपतङ्गपिपीलिकाभ्रमरदंशमशकादीनामनस्थिमतां सहस्रं हत्वा शूद्रवधः। कोकिलशुकादीनां पुरुषभारवधे शूद्रवधः। तपचितावयवकीटादिविषयमिदम्। मार्जारगोधानकुलमण्डूकश्च पतात्रिण" इत्यादि। पतत्रिषु विशेषमाह बौधायनः (१।१०।२८)—"हंसभासबर्हिणचक्रवाककाकोलूकमंडूकभटिककरिकाबभ्रुनकुलादीनां वधे शूद्रवत्"। अत्र मण्डूकादिषु बुद्धिपूर्वकता बोद्धव्या। भटिका छुच्छुंदरिः।
१५ करिका अल्पमूषिका। बभ्रुरतिलोमशो गिरिभवप्राणिविशेषः। यच्च गौतमेन—( २३।१८-१९ ) "वैश्यवन्मंडूकनकलादिषु" इत्युक्तं तत्समुदितविषयम्॥ २६९॥

[ २७१ श्लो. ] गज इत्यादि। गजवधे नीलवृषाः पञ्च देयाः। वृषोत्सर्गसम्बन्धिवृषलक्षणलक्षितो नीलवृष इति केचित्। वृषो देय एकहायनः। " अजमेषमनड्वाहं खरं हत्वैकहायनम्" इति ( ११।१३६ ) मनुवचनात्। क्रौंचः पक्षिविशेषः॥ २७१॥

[ २७२ श्लो. ] हंसेत्यादि। श्येनः संचान इति प्रसिद्धः। क्रव्यादाः सिंहव्याघ्रादयः।
२० जलशब्देन जलचरा बकादयो गृह्यन्ते। शिखंडी मयूरः। भासो गृध्रो गोष्ठकुक्कुटो वा। अक्रव्यादा हरिणादयः॥ २७२॥

[ २७३ श्लो. ] उरगेष्वित्यादि। पण्डके नपुंसके मनुष्यजातीये। त्रपु रंगम्। कोले शूकरे। गुंजापरिमितं सुवर्णम्॥ २७३॥

[ २७४ श्लो. ] तित्तिरावित्यादि। द्रोणश्चतुराढकः। गजादीनामुक्तानां वधे निर्द्धनत्वेन
२५ दातुमशक्त एकैकस्य शुद्ध्यर्थं[3] सांतपनादिकृच्छ्रमनुबन्धाद्यपेक्षया जाबालाद्युक्तमनुसन्धेयम्। यथा जाबालः—

"व्यापादनाऽपहारेषु सन्तोष्य स्वामिनस्तथा। पापं निवेद्य विप्रेभ्यः प्रायश्चित्तेन शुध्यति॥

"हस्तिनं तुरगं हत्वा हिरण्यं गां तथैव च। महासांतपनं कुर्याद्गोभूकन्याऽनृतेषु च"॥ २७४॥

[ २७५ श्लो. ] किंचित्सास्थिवधे देयं प्राणायामस्त्वनस्थिकेत्यादि। अस्थिमतां
३० ज्यैष्ठिकादीनामेकैकवधो किंचित् पणैकम्। अनस्थिके मशकादौ प्राणायामः कार्यः।

उपभोग्यफलानां वृक्षाणामाम्रादीनां गुल्मादीनां च पुष्पितानां तत्सवितुरित्यादि ऋचः शतं जपेत्। तथा च मनुः ( ११।१४२ )—

" फलदानां च वृक्षाणां छेदने जप्यमृक्शतम्। गुल्मवल्लीलतानां च पुष्पितानां च वीरुधाम्"॥ २७५॥

---

१ ब-गुणविशेषे स्वंगिराः। २ अब-धः। ३ ब- + दानशक्तौ।

[ २७७ श्लो. ] पुंश्चलीत्यादि। पुंश्चल्यादिभिर्नाभेरधः पादादिदेशे दशनक्षतः **प्राणायामं जले कृत्वा घृतं प्राश्य** परेऽह्नि शुध्यति। विशेष**माहांगिराः**—

"ब्रह्मचारी शुना दष्टस्त्र्यहः सायं पयः पिबेत्। गृहस्थो वै त्रिरात्रं तु एकाहं योऽग्निहोत्रवान्॥

"नाभेरूर्ध्वं तु दष्टस्य तदेव द्विगुणं भवेत्" ॥ २७७॥

[ २७५ श्लो. ] फलेत्यादि। बदरिकादिफलमधूकादिपुष्पतण्डुलगुडादिरसजातानां कीटानां वधे घृतमात्राशनो दिनमेकं भवेत्। **ओषधीनां** कृष्टाऽकृष्टभूजातानां प्रयोजनं **विना छेदे** क्षीराशी दिनमेकं गोऽनुगो भवेत्। अत्र स्मृत्यन्तरोक्तप्रायश्चित्तविशेषो गुणोत्कर्षापकर्षकामाकामापेक्षया व्यवस्थेयः॥ २७५॥

[ २७८ श्लो. ] **यन्म** इत्यादि। 'यन्मेऽद्य रेतः पृथिवीम्' इति 'पुनर्मामैत्विन्द्रियम्" इति च एताभ्यां स्त्रीसंभोगव्यतिरेकेण स्खलितं रेतोऽभिमन्त्र्य तेन रेतसा हृदयस्य भ्रुवोरप्यन्तरमनामिकया स्पृशेत्। ऊर्ध्वरेतसां ब्रह्मचारीयत्यादीनां पुनराह "प्राणायामविशुद्धात्मा जायते विरजाः पुनः" ॥ २७८॥

[२७९ श्लो.] **मयी**त्यादि। प्रतिबिंबरूपां मुखादेश्छायामप्सु दृष्ट्वा 'मयि तेज इन्द्रियं' इत्यादिकं जपेत्। **अशुचौ** सुरादौ **दृष्टे** वाक्पाणिपादादिचापलेऽनृतवदने सावित्रीं जपेत्। अकामतोऽनृताभिधाने त्वाचमनमात्रम्। "निष्ठीव्योक्त्वानृतानि च आचामेत् प्रयतोऽपि सन्" (५।१४५) इति **मनु**वचनात्। अल्पानृते दक्षिणश्रवणस्पर्शमात्रम्। 'अनृते दक्षिणं श्रवणं स्पृशेत्' इति **मनु**वचनात्॥ २७९॥

[ २८० श्लो. ] अवेत्यादि। **ब्रह्मचारी योषितं गत्वाऽवकीर्णी भवेत्। गर्दभपशुं निर्ऋतिदैवत्यमालभ्य** गृह्योक्तविधिना हुत्वा **विशुध्यति**। विशेषमाह **मनुः** (११।११८)—

"अविकीर्णी तु काणेन गर्दभेन चतुष्पथे। पाकयज्ञविधानेन यजेत निर्ऋतिं निशि" ॥

यदा तु स गुरुदारेष्ववकीर्णस्तदा गुरुदारगमनप्रायश्चित्तमेव कुर्यात् गुरुत्वात्॥ २८०॥

[ २८१ श्लो. ] **भैक्षे**त्यादि। **अनातुरो** ब्रह्मचारी **सप्तरात्रं भैक्ष्याग्निकार्ये त्यक्त्वा** 'कामावकीर्णोऽस्मि कामकामाय स्वाहा' 'कामाभिदुग्धोऽस्म्यभिदुग्धोऽस्मि कामकामाय स्वाहा' **इत्येताभ्यां** मन्त्राभ्या**माज्याहुतिद्वयं** हुत्वा वक्ष्यमाणश्लोकोक्तमंत्रेणोपस्थानं कुर्यात्॥२८१॥

[ २८२ श्लो. ] उपेत्यादि। 'सं मा सिञ्चन्तु' इत्यादि **बौधायनोक्तेन** प्रयताञ्जलिः किंचित्तिरश्चीनोऽग्निमुपतिष्ठेत्। **बौधायनः** (४।२।११)—

"सं[3] मा सिञ्चन्तु मरुतः सं मित्रः सं बृहस्पतिः। सं[3] माऽयमग्निः सिंचत्वायुषा च बलेन च"॥ इति,

ब्रह्मचारिणा कदाचित् मधुमांसभोजने कृते प्राजापत्यं कार्यम्। आरब्धव्रतशेषश्च समापनीयः। अस्यापवादमाह (**वसिष्ठः**–२३।११)—"स चेद्व्याधीयीत कामं गुरोरुच्छिष्टं भैषज्यार्थं सर्वं प्राश्नीयात्। येनेच्छेत्तेन चिकित्सेत्। स यदाऽगदो भवति तदोत्थायाऽदित्यमुपतिष्ठेत्। हंसःशुचिषदित्येतया" ॥ २८२॥

[ २८३ श्लो. ] **कृच्छ्रेत्यादि**। गुरुप्रयुक्तो ब्रह्मचारी यदि विषमदेशादौ गतो म्रियते तदा

१ ब–भिद्रुमो। २ गौतम २५।४। ३ ब–समां–।

प्राजापत्यत्रयं गुरुः कुर्यात्। गुरोश्चापकारं कृत्वा पादपतनादिना तं प्रसाद्य शिष्यः शुध्यति। तथा **वशिष्ठः** ( १५।१९ )— "आचार्यमातृपितृहंतारस्तत्प्रसादाद्पापाः"। हंतारोऽत्र दुःखकराः॥ २८३ ॥

[ **२८४ श्लो.** ] **क्रियेत्यादि**। औषधादिना **क्रियमाणोपकारे** ब्राह्मणादौ **मृते** न दोषः।
५ गोवृषादीनां च **भेषजादिक्रियासु** यदि विरुद्धपाको भवति तदा न दोषः। तथाङ्गिराः—
"औषधं स्नेहमाहारं ददद्गोब्राह्मणेषु च। विपाके तु विपत्तिः स्यान्न स दोषेण लिप्यते॥
"औषधे न तु दोषोऽस्ति स्वेच्छया च पिबेद्यदि। अन्यथा दीयमाने तु प्रायश्चित्ती न संशयः"॥

[ **२८६ श्लो.** ] **महेत्यादि**। मृषा वदन् यः परं महापातकेनोपपातकेन वाऽभिशंसति स जलमात्राहारो मासैकं शुद्धिमतीर्जपन्नासीत। शुद्धिमती 'एतोन्विन्द्रम्' इत्यादिकाः॥२८६॥
१० [ **२८७ श्लो.** ] **अभीत्यादि**। मृषाभिशस्तो अभिशापानन्तरमेव कृच्छ्रं प्राजापत्यं चरेत्। विशेषमाह **पैठीनसिः**— "अनृतेनाभिशस्यमानः कृच्छ्रं चरेत्। पातकेषु महापातकेषु तु मासं कृच्छ्रं चरेत्"॥ २८७ ॥

[ **२८८ श्लो.** ] **अनियुक्त** इत्यादि। नियोगमन्तरेण ज्येष्ठस्य कनिष्ठस्य भ्रातुर्जायां **गच्छं-श्चान्द्रायणं चरेत्**। एतच्च सवर्णभ्रातृजायायां भ्रातृसंतत्यर्थमेव गमने। यत्तु "संवत्सरब्रह्मचर्या-
१५ नुवृत्तौ ज्येष्ठायां चेदनियुक्तां गच्छेत् सोऽप्येतदेव कुर्यात्" इति **शंखलिखिताभ्यामुक्तं** तन्नि-योगं विना भ्रातृसंतत्यर्थमेव सवर्णागमने वेदितव्यम्। परक्रियं रजस्वलां गत्वा त्रिरात्रोपोषितो घृतं प्राश्य विशुध्यति। स्वभार्यायां **शातातपः**—"अनुदकमूत्रपुरीषकरणे सचैलस्नानम्। महाव्याहृतिहोमश्च। रजस्वलागमने चैतदेवामानुषीषु च गोवर्ज्यम्"। अनुदकमूत्रपुरीषकरणे किंचिद्विलंबेनोदकसंस्पर्शनादित्यर्थः। अमानुषीषु महिष्यादिषु ॥ २८८ ॥
२० [ **२९० श्लो.** ] **गोष्ठ** इत्यादि। **सुमन्तूक्ता**दभिशस्तादेर्यमोक्ताच्च नटनर्तकतस्करादेः सकाशात् कृतप्रतिग्रहदोषात् गोष्ठवासादिव्रतयुक्तो मुच्यते। तथा **मनुः** (११।१९४,१९३)—
"जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः। मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहात्"॥
तथा—
" यद्गर्हितेनार्जयन्ति कर्मणा ब्राह्मणा धनम्। तस्योत्सर्गेण शुध्यन्ति त्यागन तपसैव वा "॥ इति।
२५ अतः प्रतिग्रहार्जितधनस्यागाधजले ब्राह्मणे वा परित्यागं कृत्वा प्रायश्चित्तमाचरणीयम्॥२९०॥

[ **२८९ श्लो.** ] **त्रीनित्यादि**। सावित्रीपतितयाजकेऽभिचारे चार्त्विज्यं कुर्वन् त्रीन् कृच्छ्रा-ननुबन्धापेक्षया कुर्यात्। प्लाव्यवेदमनध्यायेऽध्ययनं कृत्वा शरणागतं शक्तौ सत्यां त्यक्त्वा यवान्नेन पक्त्वा भुञ्जानोऽब्दैकं व्रतमाचरेत्।॥ २८९ ॥ **इत्युपपातकप्रायश्चित्तप्रकरणम्**

[ **२९१ श्लो.** ] **प्राणायामीत्यादि**। **खरयुक्तेनोष्ट्रयुक्ते**न वा शकटादिना कामतो गत्वा
३० **नग्नः स्नात्वा भुक्त्वा वा दिवा स्त्रियं गत्वा** अन्तर्जले प्राणायामत्रयं स्नात्वा कुर्यात्॥२९१॥

[ **२९२ श्लो.** ] **गुरुं हुमित्यादि**। ज्येष्ठं ब्राह्मणं त्वंकारेण तिरस्कृत्य वादस्थाने वा जित्वा. कण्ठादिदेशे वस्त्रादिना **बध्वा वा** शीघ्रं प्रणिपातादिना प्रसाद्य तद्दिनशेषमुपवसेत् ॥ २९२ ॥

[ **२९३ श्लो.** ] **विप्रेत्यादि**। जिघांसया ब्राह्मणस्य दण्डोद्यममात्रे कृते **कृच्छ्रम्**। तस्यैव **निपातनमात्रेऽतिकृच्छ्रम्। असृक्पाते कृच्छ्रातिकृच्छ्रः। अभ्यन्तरशोणितप्रवर्त्तने**
३५ **कृच्छ्रः** ॥ २९३ ॥

१ ऋ. सं. ६।२।१८।

[ २९४ श्लो. ] देशमित्यादि । देशकालाद्यपेक्षया प्रायश्चित्तं प्रदेयम् । यथा उत्तरापथे शीतसमये जलशयनम् । ऊनषोडशवर्षस्य रोगिणश्च न संपूर्णं प्रायश्चित्तम् । तथा च विष्णुपुराणम्–
" अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्थिररोगिण एव च " ॥
तथा च्यवनः—" बालवृद्धस्त्रीणामर्धं प्रायश्चित्तम् । आषोडशाद्बालाः । सप्तत्यूर्ध्वं स्थविराः" नैकादशवर्षस्य तु प्रायश्चित्तपादः । ' पादो बालेषु दातव्य ' इति वचनात् । ५
यत्र चोक्ता न निष्कृतिरिति । यत्र पापे प्रायश्चित्तं नाम्नातं तत्र परिषद्वाक्यात् कल्पनीयम् ।
"अनाम्नातेषु धर्मेषु कथं स्यादिति चेत् भवेत् । यं शिष्टा ब्राह्मणा ब्रूयुः स धर्मः स्यादशंकितः"[1] ॥
शंखलिखितौ–
"भक्ष्याभक्ष्याण्यनेकानि ब्राह्मणानां विशेषतः । तत्र शिष्टा यथा ब्रूयुस्तत्कर्तव्यमिति स्मृतिः" ॥२९४॥
[ २९५ श्लो. ] दासीकुम्भमित्यादि । दास्यानीतमुदकपूर्णं कुंभं गृहीत्वा ग्रामाद्बहिः १० पतितस्य सपिण्डास्तस्मै पतिताय सपिण्डोदकदानवत् तदुदकं कुर्युः । तं पतितं सर्वज्ञातिकार्येषु बहिः कुर्युः ॥ २९५ ॥
[ २९६ श्लो. ] चरितेत्यादि । चरितव्रते गृहमागते ज्ञातयो नवं घटं जलपूर्णं पुण्ये जलाशये स्नात्वा तेन सह जलं प्रक्षिपेयुः । एवं कृते त्वेनं न जुगुप्सेरन् । एकजलपात्रादिना व्यवहरेयुः ॥२९६॥
[ २९७ श्लो. ] पतितेत्यादि । पतितानां स्त्रीणामेवं पूर्वोक्तो विधिः कथितः । किं त्वयं १५ विशेषः । गृहसमीपे निवासोऽन्नं वस्त्रं च रक्षकमनुष्यसहितं देयम् । न पुरुषवद्बहिर्निःसार्या ।
तथा च बृहस्पतिः—
" यत् पुंसः परदारेषु समानेषु व्रतं स्मृतम् । व्यभिचारे तु भर्तुः स्त्री तदशेषं समाचरेत् ॥
" अनिच्छन्ती तु या भुक्ता गुप्तां तां कारयेद् गृहे । मलिनांगीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥
"कारयेन्निष्कृतिं कृच्छ्रं वराकं वाससंगताम् । हीनवर्णोपभुक्ता च त्याज्या वध्याऽथवा भवेत्" ॥ २०
तदशेषमिति प्रायश्चित्तार्द्धबाधकम् । समं समानजातिपुरुषम् । हीनवर्णोपभुक्ता चेत्यत्र इच्छन्तीति शेषः । यथा वाशिष्ठः ( २१।१२ )—
" ब्राह्मणक्षत्रियविशां स्त्रियः शूद्रेण सङ्गताः । अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः" ॥
संवर्तः—
" चतस्रस्तु परित्याज्या शिष्यगा गुरुगा तथा । पतिघ्नी तु विशेषेण जुंगितोपगता च या" ॥ २५
जुंगितः कुत्सितः प्रतिलोमजः ॥ २९७ ॥
[ २९८ श्लो. ] नीचेत्यादि । नीचः शूद्रः । न केवलं ब्रह्महत्यादीनि स्त्रीणां पतनीयानि किं तु पुरुषापेक्षयाऽधिकत्वेन नीचगमनादीन्यपि पतनीयानि ॥ २९८ ॥
[ २९९ श्लो. ] शरणेत्यादि । शरणागतादीन् कृतघ्नसहितान् कृतप्रायश्चित्तानपि न संभाषणादिना व्यवहरेत् । स्कन्दपुराणे— ३०
" ब्रह्मघ्ने च सुरापे च चौरे च गुरुतल्पगे । निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥
" भर्तृपिण्डोपकर्ता च पितृपिण्डोपहारकः । तस्माद् गृहीत्वा विद्यां च दक्षिणां न प्रयच्छति ॥

१ मनुस्मृ. १२।१०८

"पुत्रान् स्त्रियश्च यो द्वेष्टि यश्च तान् घातयेन्नरः। कृतस्य दोषं वदति स कामान्न करोति च॥
"न स्मरेच्च कृतं यस्तु आश्रमान् यश्च दूषयेत्। सर्वांस्तानृषिभिः सार्धं कृतघ्नानब्रवीन्मनुः"॥२९९॥

[३०० श्लो.] **घट** इत्यादि। 'चरितव्रत आयाते निनयेयुर्नवं घटम्' (२९६ श्लो.) इत्युक्तम्। तस्मिन् घटावर्जने कृते ज्ञातिमध्यवस्थितो **गवां** घासं दद्यात्। दत्तघासभक्षणे च गोभिः ५ **सत्कृतस्य** ज्ञातीनां **सत्क्रिया** युक्ता॥ ३००॥

[३०१ श्लो.] **विख्याते**त्यादि। लोकविदितपापः परिषदनुमतं प्रायश्चित्तं कुर्यात्। लोकाविदितपापस्तु रहस्यविहितं प्रायश्चित्तं कुर्यात्।

विशेषमाह **विश्वामित्रः**—

"प्रकाश उक्तं यत्किंचिद्विंशभागो रहस्यके। त्रिंशद्भागः षष्टिभागः कल्प्यो जात्याद्यपेक्षया"॥३०१॥

१० **अथ रहस्यप्रायश्चित्तानि।**

[३०२ श्लो.] **त्रिरात्रे**त्यादि। कृतरहस्यब्रह्मवधस्त्रिरात्रोपोषितोऽन्तर्जले 'ऋतं च सत्यं च' इत्याद्य**घमर्षणसूक्तं** त्रिर्जपित्वाऽन्ते **गां पयस्विनीं दत्वा** शुध्यति॥ ३०२॥

[३०३ श्लो.] **लोमभ्य** इत्यादि। अथवा कृतोपवासो रात्रौ जलवासं कृत्वा 'लोमभ्य' इत्यादिभिर्मन्त्रैरेकैकेन पञ्चपञ्च कृत्वा चत्वारिंशद्घृताहुतीर्जुहुयात्। एतच्च कामतो विशिष्टब्राह्मण- १५ वधे ज्ञेयम्॥ ३०३॥

[३०४ श्लो.] **त्रिरात्रे**त्यादि। सुरापस्त्रिरात्रमुपोषितश्चतुर्थेऽह्नि कूष्माण्डीभिः 'यद्देवा देवहेलनम्' इत्यादि तिसृभिः ऋग्भिर्न तु प्रत्यृचं घृताहुतीर्हुत्वा शुध्यति। अनुबन्धाद्यपेक्षया आहुतिसंख्यातारतम्यं कल्पनीयम्। **ब्राह्मणस्वर्णहारी** तु त्रिरात्रोपोषितो जलस्थितो रुद्राध्यायजप्याच्छुध्यति। अत्रानुबन्धापेक्षया संख्यातारतम्यम्॥ ३०४॥

२० [३०५ श्लो.] **सहस्रे**त्यादि। सुरापस्तेयगुरुतल्पगैरेतज्जपकर्मानुबन्धापेक्षया बहुतरं कृत्वा तदन्ते पृथक् पृथक् **गौः पयस्विनी देया**॥ ३०५॥

[३०६ श्लो.] **प्राणायामे**त्यादि। स्थूलसूक्ष्मपापानामपनुत्तयेऽन्तर्जले प्राणायामशतं कार्यम्। उपपातकयुक्तानामनादिष्टस्य पापस्याप्येतदेव। तथा **शंखलिखितौ** "**रहस्ये गायत्री**"। गायत्रीमनुभाष्यान्तर्जले प्राणायामशतं कुर्यात्॥ ३०६॥

२५ [३०७ श्लो.] **ॐकारे**त्यादि। रेतःप्रभृतीनां भक्षणे कृते द्विज उपवासं कृत्वा ॐकारशताभिमंत्रितं सोमलतारसं पावनं पिबेत्। यदा तु 'सोमं सलिलम्' इति पाठः तदा सोमं सोमलतारसम्। तदभावे सलिलं पिबेदिति॥ ३०७॥

[३०८ श्लो.] **निशायां वा दिवा वापि यदज्ञानकृतं भवेत्** इत्यादि। तस्य ऋज्वर्थः। एषा च सन्ध्या बहिरुपास्या। तथा **शातातपः**—

३० "अनृतं मद्यगन्धं च दिवा मैथुनमेव च। पुनाति वृषलस्यान्नं बहिः सन्ध्या ह्युपासिता"॥३०८॥

[३०९ श्लो.] **शुक्रिये**त्यादि। "शुक्रियं विशानि देवसवितुः" इत्यादि। **आरण्यकं** 'ऋचं वाचं प्रपद्य' इत्यादि। सहस्रशः सहस्रसंख्यमित्याद्यनुबन्धापेक्षया। **रुद्रैकादशिनी** रुद्राध्यायस्यैकादशावृत्तिर्यस्यां क्रियायां सा तथा। एते सर्वपापहराः॥ ३०९॥

[ ३१० श्लो. ] **यत्रे**त्यादि। यत्र यत्र भाण्डादिसंकरदोषगृहीतमात्मानं मन्येत तत्र तत्र गायत्र्या तिलैर्होमः शक्तितः कार्यः। जपोऽपि गायत्र्या एव। तथा **बृहस्पतिः**—

"स्नात्वाऽघमर्षणं कुर्यात् प्राणायामं च संकरी। गायत्रीसूक्तजपनं तिलैर्होमश्च शक्तितः"॥ ३१०॥

[ ३११ श्लो. ] **वेदे**त्यादि।

"वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः। तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा" (२।२७)॥ ५

इति **दक्षो**क्तपञ्चविधवेदाभ्यासयुक्तं क्षमाशीलं पञ्चमहायज्ञक्रियापरं महापातकक्रियाजातान्यपि पापानि न स्पृशन्ति। एतच्चाज्ञानकृते। तथा **मनुः**—

"न वेदबलमाश्रित्य पापकर्मरतिर्भवेत्। अज्ञानाच्च प्रमादाच्च कृतं दहति नेतरत्"॥ ३११॥

[ ३१२ श्लो. ] **वायुभक्ष** इत्यादि। निराहारो **दिवा** स्थित्वाऽनुपविश्य तथैव **चाप्सु रात्रिं नीत्वोदितं** रविं **पश्यन्नप्स्वेव** स्थित्वा गायत्रीसहस्रं जपित्वा ब्रह्मवधपापव्यतिरिक्तसर्वपापान्मुक्तो १० भवति। **वशिष्ठः** (२५।१२)—

"सर्वेषामेव पापानां शोधने समुपस्थिते। अभ्यासो दशसाहस्रो गायत्र्याः शोधनं भवेत्"॥ ३१२॥

[३१३–३१४ श्लो.] **ब्रह्मे**त्यादि। **स्नाने**त्यादि। ब्रह्मचर्यमत्र प्रतिषिद्धमैथुनवर्जनम्। ध्यानं परमात्मचिन्तनम्। **अकल्कता** दंभरहितत्वम्। **माधुर्यं** प्रियवादित्वम्। अवश्यकर्तव्येऽवधानम्। एतयोर्यमनियमयोर्वक्ष्यमाणव्रताङ्गत्वेनाभिधानम्। १५

अन्यानपि व्रतधर्मानाह **बौधायनः** (२।१।६८-७१)—"कृच्छ्रे त्रिषवणमुदकोपस्पर्शनम्। अधःशयनम्। एकवस्त्रता केशश्मश्रुनखरोमवपनम्। एतदेव स्त्रियाः केशवपनंवर्ज्जम्"॥ **जाबालः**—

"आरम्भे सर्वकृच्छ्राणां समाप्तौ च विशेषतः। आज्येनैव हि शालाग्नौ जुहुयाद्व्याहृतीः पृथक्॥

"स्त्रीणां होमो न कर्त्तव्यः पञ्चगव्यं तथैव च"॥ ३१३–३१४॥

[ ३१५ श्लो. ] अथ व्रतलक्षणं कर्तव्यम्। **कुशोदक**मित्यादि। **सांतपनं** द्व्यहसाध्यम्। २० कुशोदकादिपरिमाणं ब्रह्मकूर्चोक्तमवगन्तव्यम्। यथा **पराशरः** (११।२७-२८)—

"पयः काञ्चनवर्णायाः श्वेतायाश्चैव गोमयम्। गोमूत्रं ताम्रवर्णायाः पीतायाश्च तथा घृतम्॥

"दधि च श्वेतवर्णाया इत्येतत्पञ्चगव्यकम्। गोमूत्रं माषका त्वष्टौ गोमयस्य तु षोडश॥

"क्षीरस्य द्वादश प्रोक्ता दध्नश्च दश कीर्तिताः। गोमूत्रवद्घृतस्योक्तास्तदर्धेन कुशोदकम्॥

"एतद्द्रव्यपरीमाणं शुद्ध्यर्थं कायशोधनम्। गायत्र्या गृह्य गोमूत्रं गन्धद्वारेति गोमयम्॥ २५

"आप्यायस्वेति च क्षीरं दधिक्राव्ण इति दधि। तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम्॥

"आपो हि ष्ठेति चालोड्य प्रणवेन ततः पिबेत्"। अभावे यथासम्भववर्णाया अपि ग्राह्यम्। यथा **पद्मपुराणम्** "वर्णाभावे न दोषोऽस्ति मात्राहीनं विवर्ज्जयेत्"॥ ३१५॥

[ ३१६ श्लो. ] **पृथ**गित्यादि। कुशोदकादिसांतपनद्रव्यैः षड्भिः पृथगेकैकदिनैः प्राशितैः सप्तमाहोपवाससहितः कृच्छ्रोऽयं सप्ताहसाध्यो **महासांतपनः स्मृतम्**॥ ३१६॥ ३०

[३१७ श्लो.] **पर्णे**त्यादि। पलाशपत्रादिक्वथितैरुदकैर्यथाक्रममेकैकं प्रत्यहं पीतैः पर्णकृच्छ्रोऽयं पञ्चदिनसाध्यः। तथा च **शंखलिखितौ**—"पद्मबिल्वपलाशोदुंबरकुशोदकान्येकैकसमस्तानि

पर्णकृच्छ्रः"। "यावत् सकृदाददीत तावदश्नीयात्" इत्युशनसो वचनादेकवारमेकहस्तेन गृहीतं तावदश्नीयान्नाधिकम् ॥ ३१७ ॥

[ ३१८ श्लो. ] तप्तेत्यादि। तप्तक्षीरादीनां यथोक्तविधिना तप्तकृच्छ्रोऽयं दिनचतुष्टयसाध्यः। मनुना तु द्वादशाहसाध्य उक्तः। तप्तकृच्छ्रे सकृदेव स्नानं विहितं तद्वदत्रापि तप्तकृच्छ्रत्वात्

५ सकृदेव कर्तुमुचितम्। मनुः ( ११।२१४ )—

"तप्तकृच्छ्रं चरन् विप्रो जलक्षीरघृतानिलान्। प्रतित्र्यहं पिबेदुष्णान् सकृत्स्नायी समाहितः"॥३१८॥

[ ३१९ श्लो. ] एकेत्यादि। प्रातःसायं भोजनस्य कालद्वयम्। प्रातःशब्दोऽत्र दिवापरः। तेन प्रथमदिनं प्रातर्हविष्यैकवारभोजनेन द्वितीयं नक्तेन रात्रिभोजनेन तृतीयं अप्रार्थितलब्धभोजनेन मध्याह्ने "अयाचितं तु मध्याह्ने चतुर्विंशतिरात्रकं" इति ब्रह्मपुराणवचनात् चतुर्थ-

१० मुपवासेन एवं क्रमेण चतुर्दिनसाध्यः पादकृच्छ्राख्यः। तथा पैठीनसिः—'प्रातः सायमयाचितमेकरात्रोपवासश्च' इति। स्त्रीबालवृद्धानामेष कृच्छ्रः। ग्राससंख्यापरिमाणमाह पराशरः (१०।३)—

"सायं द्वाविंशति ग्रासाः प्रातः षड्विंशतिस्तथा। अयाचिते चतुर्विंशः परं चानशनं स्मृतम्॥

"कुक्कुटाण्डप्रमाणं वा यावान् वा प्रविशेन्मुखम्। एतं ग्रासं विजानीयाच्छुद्ध्यर्थं कायशोधनम्"॥३१९

[ ३२० श्लो. ] यथेत्यादि। यथाकथंचित्त्रिगुणाः "त्र्यहं सायं त्र्यहं प्रातः"

१५ ( ६।३९,४।७ ) इत्यादि पराशरोक्तक्रमेण 'त्र्यहं प्रातस्त्र्यहं सायम्' इत्यादि ( ११।२११ ) मनूक्तक्रमेण वा द्वादशाहसाध्यः प्राजापत्यः। अयमेव प्राजापत्य आद्यत्र्यहत्रये पाणिपूरान्नभोजनः सन्नतिकृच्छ्रः। 'सायं द्वाविंशतिग्रासा' इत्यादेरपवादोऽयम् ॥ ३२० ॥

[ ३२१ श्लो. ] कृच्छ्रेत्यादि। एकविंशतिदिवसान् पयसा क्षपणे सति कृच्छ्रातिकृच्छ्रः। पयोऽत्र जलम्। "चरन् कृच्छ्रातिकृच्छ्रं तु पिबेत्तोयं च शीतलम्" इति ब्रह्मपुराणवचनात्

२० "द्वादशाहोपवासेन पराकः परिकीर्तितः। एकविंशतिरात्रं तु कालेष्वेतेषु संयतः" ॥ इति। पराके जपादिकं विशेषमाह बृहस्पतिः—

"जपहोमरतः कुर्याद्द्वादशाहमभोजनम्। पराक एष विख्यातः सर्वपापप्रणाशनः"॥

[ ३२२ श्लो. ] पिण्याकेत्यादि। उपयोग इति शेषः। पिण्याकस्तिलकल्कः। आचामो मंडः। षडहसाध्योऽयम्। तथा शंखलिखितौ आचामं भक्तमाहतुः—"आचामपिण्याकभक्तोदकं

२५ सक्तव उपवासश्च" इति सौम्यकृच्छ्रः। एतान्येव एकैकं त्र्यहमभ्यस्तानि तुलापुरुषमित्याचक्षते ॥ ३२२ ॥

[ ३२३ श्लो. ] एषामित्यादि। एषां पिण्याकादीनां एकैकस्य त्रिरात्राभ्यासेन पञ्चदशदिनव्यापी तुलापुरुषः। एवं पञ्चदशाहसाध्यत्वनिधानादुपवासनिवृत्तिः। जाबालः पुनरप्येतादृशमाह—

३० "पिण्याकस्य तुला त्वेका तक्रं चोदकसक्तवः। त्रिरात्रमुपवासश्च तुलापुरुष उच्यते"॥ आचामरहितद्रव्यचतुष्टयेन उपवासत्रयेण च पञ्चदशाह्निकं तुलापुरुषमित्युक्तत्वात्। तुला त्वेकेति तुलापलशतम् ॥ ३२३ ॥

[ ३२४ श्लो. ] तिथिवृध्द्येत्यादि । शुक्लप्रतिपदि एकं ग्रासमारभ्य पौर्णमासीपर्यन्तमेकैकोपचयेन ग्रासान् भक्षणार्थं वर्द्धयेत् । कृष्णप्रतिपदि चतुर्द्दशग्रासानारभ्य चतुर्दशीपर्यन्तमेकैकापचयेन ग्रासं यवमध्यं चान्द्रायणं चरन् ह्रासयेत् । अमावास्यायामुपवासः । एवं त्रिंशद्दिनसाध्य इत्युत्सर्गः । तिथिक्षयवृद्धिभ्यां पिण्डानामपि क्षयवृद्धी ऊहनीये । शुक्लप्रतिपदुपक्रमे चेदम् । इतिकर्त्तव्यता बौधायनादिष्वनुसंधेया ॥ ३२४ ॥ ५

[ ३२५ श्लो. ] यथेत्यादि । प्रतिदिनं पिण्डसंख्यानियमेनेत्यर्थः । जाबालस्तु पञ्चप्रकारमेतदाह—

" पिपीलिकयवमध्यं च यतिचान्द्रायणं तथा । चान्द्रायणं दिवा ज्ञेयं चतुर्थं सर्वतोमुखम् ॥
" पञ्चमं शिशुसाह्वं च तुल्यपुण्यफलोदयम् । एकैकं वर्धयेद्ग्रासं शुक्ले कृष्णे च ह्रासयेत् ॥
" अमावास्यां न भुञ्जीत यवमध्यं चरन् द्विजः ॥ १०
" एकैकं ह्रासयेत् कृष्णे शुक्ले चैवं विवर्धयेत् । पौर्णमास्यां न भुञ्जीत पिपीलिकतनुमध्यमम् ।
"अष्टावष्टौ चरेद्ग्रासान् मध्याह्नेऽहरहर्द्विजः । स्नायात्रिषवणं चैव यतिचांद्रायणं विदुः ॥
"चतुरः प्रातरश्नीयाच्चतुरः सायमेव तु । कुर्यात्रिषवणं चैव शिशुचान्द्रायणं चरन् ॥
"यथाकथंचित् पिण्डानां तिस्रोऽशीतिः समाहितः । मासेनाश्नन् हविष्यस्य चन्द्रस्यैति सलोकताम्"॥ ॥ ३२५ ॥ १५

[ ३२६ श्लो. ] कुर्यादित्यादि । प्रातरादिसवनत्रयस्नानशीलः प्राजापत्यादि करोति । तथा चान्द्रायणमपि —" आर्द्रवासाश्चरेत् कृच्छ्रं स्नात्वा वस्त्रं न पीडयेत् " इति यमवचनादार्द्रवासस्त्वं बोद्धव्यम् ।
अघमर्षणसूक्तादीनि जपेत् । पिण्डान् गायत्र्याभिमन्त्रयेत् भक्षणार्थम् । विशेषमाह यमः—
"अंगुल्यग्रस्थितं ग्रासं गायत्र्या चाभिमन्त्रयेत् । प्राशयित्वा उपस्पृश्य पुनरेवाभिमंत्रयेत् ॥ २०
"आयसं तैजसं पात्रं चक्रोत्पन्नं विवर्जयेत् । असुराणां हि तत्पात्रं देवपात्रमचक्रजम् ॥
"यज्ञियानां तु वृक्षाणां तेषां पर्णैः स्वयं च्युतैः" ॥ ३२६ ॥

[ ३२७ श्लो. ] अनादीत्यादि । विशेषतोऽनुक्तप्रायश्चित्तेषु पापेषु चान्द्रायणेन शुद्धिः । यः पुनरभ्युदयार्थं करोति स चन्द्रसमानस्थानवासित्वं गच्छति । यथा हारीतः—
"चान्द्रायणं पराको वा तुलापुरुष एव वा । गवां चैवानुगमनं सर्वपापप्रणाशनम् " ॥ २५
एवं प्राजापत्योऽपि ।
" यत्रोक्तं यत्र वा नोक्तमिह पापप्रणाशनम् । प्राजापत्येन कृच्छ्रेण शुध्यते नाऽत्र संशयः" ॥

विष्णुपुराणे—
"प्रायश्चित्तान्यशेषाणि तपः कर्मात्मकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम्" ॥
अत्र व्रतकरणासमर्थस्यानुतापादिनापि शुद्धिमाह यमः— ३०
"शोषणेन शरीरस्य तपसाऽध्ययनेन च । पापकृन्मुच्यते पापाद्दानेन च दमेन च"॥
देयद्रव्याण्याह गोतमः (१९।६१)—"हिरण्यं गौर्वासोऽश्वो भूमिस्तिलाघृतमन्नमिति देयानि"।

१. तृतीये अष्टमः । ४।५।१७ ।

अत्र कृच्छ्रं केन दानेन समानमित्याकांक्षायां—"क्रव्यादांस्तु मृगान् हत्वा धेनुं दद्यात्पयस्विनीम्" इत्युक्त्वा **मनुनोक्तम्** (११।१३७)—

"दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्। एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये"॥ इत्यतः पयस्विनीदानं कृच्छ्रसमं प्रतिभाति। कृच्छ्रं च निर्विशिष्टं प्राजापत्यमेव। द्वादशवार्षिकव्रते तु

५ "पूर्णे तु द्वादशे वर्षे ब्रह्महा पूयते नरः। षड्भिर्वर्षैः कृच्छ्रचारी ब्रह्महा तु विशुध्यति"॥ षड्वर्षकृच्छ्रचरणेन सह द्वादशवार्षिकव्रताचरणस्य समत्व**मंगिरसोक्तम्**—"तेन षड्भिर्वर्षैरशीत्यधिकं प्राजापत्यशतं भवति"। तत्र धेनुसंकलनं निबन्धान्तरदर्शनात् सिद्धवदत्र लिख्यते। यथा—दिनद्वयसाध्यसांतपने पुराणैकलभ्यं कांचनं देयम्। सप्तदिनसाध्यसांतपने धेनुद्वयम्। पञ्चदिनसाध्ये पर्णकृच्छ्रे धेनुरेका। दिनचतुष्टयसाध्ये तप्तकृच्छ्रेऽपि धेनुरेका। दिनचतुष्टयसाध्ये

१० पादकृच्छ्रे पुराणैकलभ्यं काञ्चनम्। द्वादशदिनसाध्ये पराके धेनुपञ्चकम्। पञ्चदिनसाध्ये सोमकृच्छ्रे एका धेनुः। पञ्चदशदिनसाध्ये तुलापुरुषे धेनुत्रयम्। त्रिंशद्दिनसाध्ये चान्द्रायणे अष्टौ धेनवः। नक्तभोजनेऽप्येकमाषको द्विकृष्णलश्चाऽयम्। उपवासे तु रौप्यमाषकत्रयम्। एतान्यत्र कृच्छ्राण्युक्तानि। धेनोरभावे तु "गवामभावे दातव्यं गोमूल्यं तु न संशयः" इति **संवर्त्त**-वचनात्तन्मूल्यं देयम्। मूल्यं तु धेनोः पुराणत्रयमाचारादेव। यत्तु **कात्यायनेन** मूल्यं परि-

१५ शिष्योक्तम्—

"अथातः स्याद्ब्रह्मवादीनां यज्ञादौ मूल्यकल्पना। आहुरप्यनुकल्पेन यज्ञादौ तद्गुणं भवेत्॥
"द्वात्रिंशत्पणिका गावश्चतुःकार्षापणो वरः। वृषे षट्कार्षापणका अष्टावनडुहस्तथा॥
"दशकार्षापणा धेनुरश्वे पञ्चदशैव तु। हिरण्ये कार्षापणकं नव सप्त तथाधिकाः।
"वस्त्रे कार्षापणश्छागे अष्टौ पणा द्वादशाधिके। वृषल्यामथ पञ्चाशन्मूल्यं कार्षापणाः स्मृताः"॥

२० इत्यादि तद्यज्ञविषयम्॥ ३२७॥

**[३२८-३३५ श्लो.]** **कृच्छ्रकृ**दित्यादि। सांतपनादिकृच्छ्राचरणपरः। धर्मान् स्वर्गापवर्गहेतून् काम्यांश्च पुत्रादीन् महतीं च श्रियं प्राप्नोति। यथा समाहितो यजमानो ज्योतिष्टोमादेर्गुरुफलं चिरोपभोग्यस्वर्गादिरूपं प्राप्नोति तथा कृच्छ्रकृदपि॥३२९ श्लो.॥ **श्रुत्वेत्यादि इदं** वक्ष्यमाणम्। ॥ ३३०॥ विष्टपमित्यादि। ऋज्वर्थम्॥ ३३२॥ **श्लोकेत्यादि**। स्पष्टार्थावेतौ॥ ३३३॥ **ब्राह्मण**

२५ इत्यादि। **यास्यतीत्यर्थे** यातीति वर्त्तमानसामीप्ये लट्॥ ३३४॥ **य इदमित्यादि**। भवानिति याज्ञवल्क्यस्य निर्देशः॥ ३३५॥ **श्रुत्वेत्यादि**। तु शब्दो वृत्तार्थवाचकः। अपेक्षितार्थानुमतौ स्वयंभूनमस्करणं आचारपालनार्थं मंगलार्थं वेति॥ ३२८-३३५॥

इति **साहुडिया** महोपाध्यायश्री**शूलपाणि**विरचितायां **याज्ञवल्क्यटीकायां** तृतीयोऽध्यायः।

याज्ञवल्क्यप्रमाणम्॥ ९४३॥ शुभमस्तु। शकाब्दाः १७११॥

---

१ ब-अ।

# एतत्पुस्तकोद्धृतवचनानां सूचिः ।

## पुराणानि